॥ श्रीपद्मावतीस्तोत्रम् ॥
% २७
श्रीः ॥

अस्तु पद्मसरोमध्यादाविर्भूतं परं महः ।
वशे यस्य परं धाम तद्वृषाचल मास्थितम् ॥ १॥

अनन्याधीनविभवमद्भुतं दैवतं श्रये ।
मातरं जगतां लक्ष्मीं जगन्मातुः परां प्रियाम् ॥ २॥

सखीभिश्श्रुतिभिर्नित्यं यां यथावत् पनायिताम् ।
आकर्ण्य हृदये न्यस्यन् लब्धात्मा श्रीनिधिः परः ॥ ३॥

मातुस्ते नामधेयं तत् देबतेति हरिर्ध्रुवम् ।
पद्मदेव्युच्यते तेन नित्यश्लिष्टतया त्वया ॥ ४॥

प्रजाः पतिप्रियाः कृत्वा भोगसाम्यविधित्सया ।
स्वच्छायाश्रयणं तासु तनोषि कृपया रमे ॥ ५॥

सरोजसौरभाऽऽधायि दिव्यं लावण्यवर्षि ते ।
वशीकृतवृषाद्रीशं रूपं पापं व्यपोहतु ॥ ६॥

अभये कृपया देवि प्रतिज्ञाते त्वया हरिः ।
व्याजभङ्गभिया वक्ति प्रपत्तिं पाणिमुद्रया ॥ ७॥

यया खलु परिष्वक्तो देवो देवत्वमश्नुते ।
श्रद्धया सर्वलोकैकहितां त्वां मातरं श्रये ॥ ८॥

अम्बुजनिवासरसिकामम्बुजनेत्रस्य वल्लभां देवीम् ।
अनवद्यगुणगरिम्ना श्रियं परां निस्समां वन्दे ॥ ९॥

आश्रयतु मानसं सुखमासीनामम्बुजे जगज्जननीम् ।
आश्रितरक्षणहेतोराद्दतपद्मावतीरूपाम् ॥ १०॥

प्रणमयति सव्यकरतो दक्षिणतो या ददाति चाप्यभयम् ।
स्वाधीनलोकवृत्तिं सरोजवासां परां वन्दे ॥ ११॥

परया मया त्वया खलु परमोऽभूत्पुरुष एष देवि तथा ।

अपरमताऽऽपत्तिभियाऽनपायिनीमुरसि धत्ते त्वाम् ॥ १२॥

निग्रहनितान्तदूरामाग्रहरहितैः प्रबुद्धविभवां त्वाम् ।
प्राप्यां प्रापकभूतां परमां विष्णोः प्रियां वन्दे ॥ १३॥

निखिलविभूतिनियन्ता यत्पदलाक्षाङ्कलक्षितोरस्कः ।
अत्यन्तसौम्यमूर्तिं मातरमनघां श्रियं वन्दे ॥ १४॥

दुष्कृतकर्तृबहिष्कृतिबद्धश्रद्धे परे हरौ पुंसि ।
प्रादुष्कृतवचनसुधां श्रियं प्रपद्ये शुभं ददतीम् ॥ १५॥

अखिलैराश्रितहृद्यैर्गुणैः परां त्वां निरीक्ष्य सव्रीडम् ।
विष्णुं श्रुतीर्ध्रुवं श्रीः सखीस्त्वमादिष्टवत्यसि स्तोतुम् ॥ १६॥

पापानि वर्धयति नः परो रणं तैश्चिकीर्षुरतिवेलम् ।
रक्षोवधान्त इव ते परिरम्भं मातरद्भुतं लिप्सुः ॥ १७॥

अनघैरम्बुजवासिनि कटाक्षितैस्सहजशीतलैर्दिव्यैः ।
अच्युतरूपोल्लासिभिरस्माक भवुकमत्र देहि त्वम् ॥ १८॥

शुकपुरमध्यशोभिशुभसद्मसमुज्ज्वलया
वृषगिरिशृङ्गवासिपुरुषोत्तमसंश्रितया ।
अखिलजगद्धितैकपरया कृपया परया
मम शुभमस्तु नित्यमनयाऽनघया रमया ॥ १९॥

कमलकुहर दीव्यद्दिव्यरूपां श्रयन्तः
पुनरपि पुरुहूतोऽन्ये च यां प्राप्तसत्ताः ।
वृषगिरिवरवासी यद्वशे विश्रुतोऽसौ
सविनयमयमस्यै साधु बद्धोऽञ्जलिर्मे ॥ २०॥

त्रायस्व मामखिलरक्षणजागरूके
नारायणस्य हृदये विहिताधिवासे ।
पाथोजवासरसिके पदपङ्कजं ते
कारुण्यदुग्धजलधे शरणं भजामि ॥ २१॥

श्रीस्त्वं श्रिता शरणमीप्सुभिरमार्तरावं
श्रुत्वा श्रिता वृषगिरीशभुजान्तरालम् ।
तं श्रावयस्यथ शृणासि समस्तमेनः

श्रीणासि सर्वमपि शेषजनोचितं नः ॥ २२॥

मध्ये समस्तजगदीशितुरब्जगेहे
मातश्चितश्च भवती प्रणवे विभान्ती ।
सत्यं व्यनक्ति घटनां सरसैर्वचोभिः
शेषाद्रिगस्य चरणे शरणार्थिनां नः ॥ २३॥

शुकपत्तनवासतत्परां जगतां भाग्यमनुग्रहात्मिकाम् ।
सरसीरुहवासिनीमिमां शरणं याभ्यहमन्वहं श्रियम् ॥ २४॥

अतिशाय्यनुरूपदिव्यरूपा सततं त्वं श्रितरक्षकस्थ शौरेः ।
दयया वृषशैलमाश्रितेऽस्मिन् कमलेऽधः कमले यदाविरासीः ॥ २५॥

वृषपर्वततुङ्गशृङ्गभाजा
निहिता मादृशनीचरक्षणार्थे ।
यग्रीवकटशकाव्यकलापं
कमले करुणारसैकसान्द्रा
स्वकसंवीक्षणसंहतिर्ध्रुवं त्वम ॥ २६॥

निकटेऽत्र गिरौ समागतोऽसौ
तनयाः! मैवभितो विधत्त पापम् ।
इति दुःखनिराचिकीर्षुरस्म-
त्प्रतिबोधार्थमिहैत्य भासि मातः ॥ २७॥

पतिरेष परं पदं विहाय
प्रथितं वेङ्कटशैलमाश्रितस्सन् ।
उपतिष्ठति मे गुणीभवस्तत्
न भयं वः श्रयतेति वक्षि मातः ॥ २८॥

नानारूपाण्यधिगतवती नाथमेनं श्रयन्ती
नाकित्वं त्वं जननि तनुषे नारकिष्वप्यरं यत् ।
तत्किं चित्रं जगति हतकाः कष्टगत्या तवेदं
प्राप्ताः पादाम्बुजमिह लसन्त्येव लब्धेष्टवर्गाः ॥ २९॥

(टिप्पणी -अरं - भृशं, रेफशून्यमित्यप्यर्थः ।
नारकिणां रेफशून्यत्वे नाकित्वम् ।
हतकाः हतककारा इत्यर्थान्तरम् । इदं इकारदम्
कष्टगतौ ककारहानौ इकारे सति इष्टगतिर्भवति)

त्वदाश्लिष्टोरस्के स्वकचरणयुग्मं प्रणयतः
प्रपत्तव्यं देवे प्रकटयति नारायण इह ।
त्वमम्ब श्रीः स्वस्मिन् श्रुतिमितमुपायत्वमभय-
स्फुटीकृत्या पत्या तुलितमनुकम्प्य प्रथयसि ॥ ३०॥

तपसा श्रीनिवासेन प्राप्तां शुकपुरे पुरा ।
श्रियं पद्मावतीमित्थं प्रणतो वीरराघवः ॥ ३१॥

इति तर्कार्णवश्च पण्डितरत्न वात्स्य
श्रीवीरराघवविरचितं पद्मावतीस्तोत्रं सम्पूर्णम् ॥